# अथ पञ्चदशं काण्डम् ॥

'व्रात्य आसीत्' इत्यारभ्य 'अह्ना प्रत्यङ्' इत्यन्तानामष्टादशपर्यायाणामथर्वा ऋषिः। (१-४, ६-१८) प्रथमादिचतुर्णां षष्ठादित्रयोदशानाञ्च पर्यायाणामध्यात्मं व्रात्यो वा, (५) पञ्चमस्य च रुद्रो देवता ॥

[१] प्रथमः पर्यायः

(१-८) अष्टर्चस्यास्य पर्यायस्य (१) प्रथमर्चः साम्नी पङ्क्तिः, (२) द्वितीयाया द्विपदा साम्नी बृहती, (३) तृतीयाया एकपदा यजुर्ब्राह्म्यनुष्टुप्, (४) चतुर्थ्या एकपदा विराड्गायत्री, (५) पञ्चम्याः साम्न्यनुष्टुप्, (६) षष्ठ्यास्त्रिपदा प्राजापत्या बृहती, (७) सप्तम्या आसुरी पङ्क्तिः, (८) अष्टम्याश्च त्रिपदानुष्टुप् छन्दांसि ॥

व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत् ॥१॥
स प्रजापतिः सुवर्णमात्मन्नपश्यत्तत्प्राजनयत् ॥२॥
तदेकमभवत्तल्ललाममभवत्तन्महदभवत्तज्ज्येष्ठमभवत्-
द्ब्रह्माभवत्तत्तपोऽभवत्तत्सत्यमभवत्तेन प्राजायत ॥३॥
सोऽवर्धत स महानभवत्स महादेवोऽभवत् ॥४॥
स देवानामीशां पर्यैत्स ईशानोऽभवत् ॥५॥

व्रात्यः। आसीत्। ईर्यमानः। एव। सः। प्रजाऽपतिम्। सम्। ऐरयत् ॥ १ ॥

सः। प्रजाऽपतिः। सुऽवर्णम्। आत्मन्। अपश्यत्। तत्। प्र। अजनयत् ॥ २ ॥

तत्। एकम्। अभवत्। तत्। ललामम्। अभवत्। तत्। महत्। अभवत्। तत्। ज्येष्ठम्। अभवत्। तत्। ब्रह्म। अभवत्। तत्। तपः। अभवत्। तत्। सत्यम्। अभवत्। तेन। प्र। अजायत ॥ ३ ॥

सः। अवर्धत। सः। महान्। अभवत्। सः। महाऽदेवः। अभवत् ॥ ४ ॥

सः। देवानाम्। ईशाम्। परि। ऐत्। सः। ईशानः। अभवत् ॥ ५ ॥



PARYĀYA - I

## Vrātyāḥ

XV.1.1 There was the Vrātya (the Supreme Being), just roaming about. He stirred the Prajāpati (the Lord of creatures) to life.

XV.1.2 He, the Lord of creatures, beheld the beauteous one within him. He begot that.

XV.1.3 That became singular; that became beautiful; that became great; that became the chiefest; that became the Lord Supreme; that became the penance; that became the truth; thereby that procreated.

XV.1.4 He grew up; he became great; he became Mahādeva (the great Lord).

XV.1.5 He attained sway over the enlightened ones. Be became Īśāna (the Master).

स एकव्रात्योऽभवत्स धनुरादत्त तदेवेन्द्रधनुः ॥६॥
नीलमस्योदरं लोहितं पृष्ठम् ॥७॥
नीलेनैवाप्रियं भ्रातृव्यं प्रोर्णोति लोहितेन
द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति ॥८॥

सः । एकऽव्रात्यः । अभवत् । सः । धनुः । आ । अदत्त । तत् । एव । इन्द्रऽधनुः ॥ ६ ॥

नीलम् । अस्य । उदरम् । लोहितम् । पृष्ठम् ॥ ७ ॥

नीलेन । एव । अप्रियम् । भ्रातृव्यम् । प्र । ऊर्णोति । लोहितेन । द्विषन्तम् । विध्यति । इति । ब्रह्मऽवादिनः । वदन्ति ॥ ८ ॥

[२] द्वितीयः पर्यायः

(१-२८) अष्टाविंशत्यृचस्यास्य पर्यायस्य (१, ६, ९, १५, २१, २६) प्रथमाषष्ठीनवमीपञ्चदश्येकविंशीषड्विंशीनामृचां साम्न्यनुष्टुप्, (२, १६, २२) द्वितीयाषोडशीद्वाविंशीनां साम्नी त्रिष्टुप्, (३) तृतीयाया द्विपदार्षी पङ्क्तिः, (४, १८, २४) चतुर्थ्यष्टादशीचतुर्विंशीनां द्विपदा ब्राह्मी गायत्री, (५, १३, २५) पञ्चमीत्रयोदशीपञ्चविंशीनां द्विपदार्षी जगती, [७, १४ (२), २० (२), २७] सप्तम्याश्चतुर्दशीविंश्योर्द्वितीयावसानयोः सप्तविंश्याश्च पदपङ्क्तिः, [८, १४ (१), २० (१), २८] अष्टम्याश्चतुर्दशीविंश्योस्तृतीयावसानयोरष्टाविंश्याश्च त्रिपदा प्राजापत्या त्रिष्टुप्, (१०) दशम्या एकपदोष्णिक्, (११) एकादश्या द्विपदार्षी भुरिक्त्रिष्टुप्, (१२) द्वादश्या आर्षी परानुष्टुप्, [१४ (१)] चतुर्दश्याः प्रथमावसानस्य साम्नी पङ्क्तिः, (१७) सप्तदश्या द्विपदा विराडार्षी पङ्क्तिः, (१९) एकोनविंश्या द्विपदा विराडार्षी जगती, (२०) विंश्या आसुरी गायत्री, (२३) त्रयोविंश्याश्च निचृदार्षी पङ्क्तिश्छन्दांसि ॥

स उदतिष्ठत्स प्राचीं दिशमनु व्यचलत् ॥१॥
तं बृहच्च रथन्तरं चादित्याश्च विश्वे च देवा अनुव्यचलन् ॥२॥
बृहते च वै स रथन्तराय चादित्येभ्यश्च विश्वेभ्यश्च
देवेभ्य आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥३॥

सः । उत् । अतिष्ठत् । सः । प्राचीम् । दिशम् । अनु । वि । अचलत् ॥ १ ॥

तम् । बृहत् । च । रथम्ऽतरम् । च । आदित्याः । च । विश्वे । च । देवाः । अनुऽव्यचलन् ॥२॥

बृहते । च । वै । सः । रथम्ऽतराय । च । आदित्येभ्यः । च । विश्वेभ्यः । च । देवेभ्यः । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ ३ ॥



**XV.1.6** He became the sole vrātya (the Supreme being); He took hold of a low. That, in very deed, is the rainbow.

**XV.1.7** Blue (black) is its belly; red is its back.

**XV.1.8** With the blue (black) it covers the disagreeable hostile cousin; with the red it pierce through the hateful enemy, so say the knowledgeable ones.

PARYĀYA - II

**XV.2.1** He rose up. He started moving towards the eastern quarter.

**XV.2.2** The bṛhat Sāman and the rathāntara Sāman, the old sages and all the enlightened ones started moving following him.

**XV.2.3** From the bṛhat Sāman and from the rathāntara Sāman, from the old sages and from all the enlightened ones, is he cut off, whoso reviles such a knowledgeable wandering saint.

बृहतश्च वै स रथन्तरस्य चादित्यानां च विश्वेषां च
देवानां प्रियं धाम भवति तस्य प्राच्यां दिशि ॥४॥
श्रद्धा पुंश्चली मित्रो मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥५॥
भूतं च भविष्यच्च परिष्कन्दौ मनो विपथम् ॥६॥
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥७॥
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥८॥ (१)
स उदतिष्ठत्स दक्षिणां दिशमनु व्यचलत् ॥९॥
तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥१०॥

बृहतः । च । वै । सः । रथम्ऽतरस्य । च । आदित्यानाम् । च । विश्वेषाम् । च । देवानाम् ।
प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ४ ॥
तस्य । प्राच्याम् । दिशि । श्रद्धा । पुंश्चली । मित्रः । मागधः । विऽज्ञानम् । वासः ।
अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ ५ ॥
भूतम् । च । भविष्यत् । च । परिऽस्कन्दौ । मनः । विऽपथम् ॥ ६ ॥
मातरिश्वा । च । पवमानः । च । विपथऽवाहौ । वातः । सारथिः । रेष्मा । प्रऽतोदः ।
कीर्तिः । च । यशः । च । पुरःऽसरौ ॥ ७ ॥
आ । एनम् । कीर्तिः । गच्छति । आ । यशः । गच्छति । यः । एवम् । वेद ॥ ८ ॥
सः । उत् । अतिष्ठत् । सः । दक्षिणाम् । दिशम् । अनु । वि । अचलत् ॥ ९ ॥
तम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । यज्ञः । च । यजमानः । च । पशवः ।
च । अनुऽव्यचलन् ॥ १० ॥



**XV.2.4** Surely he becomes a favourite of the bṛhat Sāman and the rathāntara Sāman, of the old sages and of all the enlightened ones. In the eastern quarter, he has a pleasing abode.

**XV.2.5** The faith becomes his sweet hear, the sun his praise-singer, comprehension his garment, day his turban, night his hair, two rays his two ear-rings, the brightness (of stars) his jewel;

**XV.2.6** Both, what has been and what is to be, become his two foot men, the mind his war-chariot;

**XV.2.7** The atmosphere wind and the purifying wind (become) his two chariot-horses, the gale his charioteer and the tempest his whip;

**XV.2.8** Glory and fame (become) his two fore-runners; to him comes the glory, (to him) comes the fame, who knows it thus.

**XV.2.9** He rose up. He started moving towards the southern quarter.

**XV.2.10** The yājnayajniya Sāman and the Vāmadevya Saman, the sacrifice, and the sacrificer and the cattle started following him.

यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च<br>
पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥११॥<br>
यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च<br>
यजमानस्य च पशूनां च प्रियं धाम भवति तस्य दक्षिणायां दिशि ॥१२॥<br>
उषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं<br>
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥१३॥<br>
अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम् ।<br>
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ।<br>
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥१४॥(७)

स उदतिष्ठत्स प्रतीचीं दिशमनु व्यचलत् ॥१५॥<br>
तं वैरूपं च वैराजं चापश्च वरुणश्च राजानुव्यचलन् ॥१६॥<br>
वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च<br>
राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥१७॥

यज्ञायज्ञियाय । च । वै । सः । वामऽदेव्याय । च । यज्ञाय । च । यजमानाय । च ।<br>
पशुऽभ्यः । च । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ ११ ॥<br>
यज्ञायज्ञियस्य । च । वै । सः । वामऽदेव्यस्य । च । यज्ञस्य । च । यजमानस्य । च ।<br>
पशुनाम् । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १२ ॥<br>
तस्य । दक्षिणायाम् । दिशि । उषाः । पुंश्चली । मन्त्रः । मागधः । विऽज्ञानम् । वासः ।<br>
अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ १३ ॥<br>
अमाऽवास्या । च । पौर्णऽमासी । च ।०।०।० ॥ १४ ॥<br>
सः । उत् । अतिष्ठत् । सः । प्रतीचीम् । दिशम् । अनु । वि । अचलत् ॥ १५ ॥<br>
तम् । वैरूपम् । च । वैराजम् । च । आपः । च । वरुणः । च । राजा । अनुऽव्यचलन् ॥<br>
वैरूपाय । च । वै । सः । वैराजाय । च । अत्ऽभ्यः । च । वरुणाय । च । राज्ञे । आ ।<br>
वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ १७ ॥



**XV.2.11** From the yajnāyjniya Sāman and from the Vāmadevya Sāman, from the sacrifice and the sacrificer and from the cattle is he cut off, whoso reviles such a knowledgeable, wandering saint.

**XV.2.12** Surely he becomes a favourite of the yajnāyajniya Sāman and the Vāmadevya Sāman, of the sacrifice and the sacrificer and of the cattle. In the southern quarter he has a pleasing abode.

**XV.2.13** The dawn becomes his sweet heart, the hymn his praise-singer, comprehension his garment, day his turban, night his hair, two rays his two ear-rings, the brightness (of stars) his jewel;

**XV.2.14** The night of no moon and the night of full moon (become) his two foot men, the wind his war-chariot; the atmospheric wind and the purified wind (become) his two chariot-horses, the gale his charioteer and the tempest his whip; glory and fame become his two fore-runners; to him comes the glory, (to him) comes the fame, who knows it thus.

**XV.2.15** He rose up. He started moving towards the western quarter.

**XV.2.16** The Vairūpa Sāman and the vairāja Sāman, the waters and the venerable king started following him.

**XV.2.17** From the Vairūpa Sāman and from the Vairāja Sāman, from the waters and from the venerable king is he cut off, whoso reviles such a knowledgeable wandering saint;

वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च
राज्ञः प्रियं धाम भवति तस्य प्रतीच्यां दिशि ॥१८॥
इरा पुंश्चली हसो मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥१९॥
अहश्च रात्री च परिष्कन्दौ मनो विपथम् ।
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ।
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥२०॥(७)
स उदतिष्ठत्स उदीचीं दिशमनु व्यचलत् ॥२१॥
तं श्यैतं च नौधसं च सप्तर्षयश्च सोमश्च राजानुव्यचलन् ॥२२॥
श्यैताय च वै स नौधसाय च सप्तर्षिभ्यश्च सोमाय च
राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥२३॥

वैरूपस्य । च । वै । सः । वैराजस्य । च । अपाम् । च । वरुणस्य । च । राज्ञः । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १८ ॥

तस्य । प्रतीच्याम् । दिशि । इरा । पुंश्चली । हसः । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ १९ ॥

अहः । च । रात्री । च ।०।०।० ॥ २० ॥

सः । उत् । अतिष्ठत् । सः । उदीचीम् । दिशम् । अनु । वि । अचलत् ॥ २१ ॥

तम् । श्यैतम् । च । नौधसम् । च । सप्तऽऋषयः । च । सोमः । च । राजा । अनुऽव्यचलन् ॥ २२ ॥

श्यैताय । च । वै । सः । नौधसाय । च । सप्तर्षिऽभ्यः । च । सोमाय । च । राज्ञे । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ २३ ॥



**XV.2.18** Surely he becomes a favourite of the Vairūpa Sāman and the Vairāja Sāman, of the waters and of the venerable king. In the western quarter he has a pleasing abode.

**XV.2.19** The earth (irā) becomes his sweet heart, the laughter his praise-singer, comprehension his garment, day his turban, night his hair, two rays his two ear-rings, the brightness (of stars) his jewel;

**XV.2.20** The day and the night (become) his two footmen, the mind his war-chariot, the atmospheric wind and the purifying wind (become) his two chariot-horses, the gale his charioteer and the tempest his whip; glory and fame become his two fore-runners; to him comes the glory, (to him) comes the fame, who knows it thus.

**XV.2.21** He rose up. He started moving towards the northern quarter.

**XV.2.22** The śyaita Sāman and the naudhasa Sāman, the seven seers and the sparkling Soma (the cure juice) started following him,

**XV.2.23** From the śyaita Sāman and the naudhasa Saman, from the seven-seers and from the sparkling Soma is he cut off, whoso reviles such a knowledgeable wandering saint.

श्यैतस्य च वै स नौधसस्य च सप्तर्षीणां च सोमस्य च
राज्ञः प्रियं धाम भवति तस्योदीच्यां दिशि ॥२४॥
विद्युत्पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥२५॥
श्रुतं च विश्रुतं च परिष्कन्दौ मनो विपथम् ॥२६॥
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥२७॥
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥२८॥ (७)

श्यैतस्य । च । वै । सः । नौधसस्य । च । सप्तऽऋषीणाम । च । सोमस्य । च ।
राज्ञः । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २४ ॥

तस्य । उदीच्याम् । दिशि । विऽद्युत् । पुंश्चली । स्तनयित्नुः । मागधः । विऽज्ञानम् ।
वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥२५॥

श्रुतम् । च । विऽश्रुतम् । च । परिऽस्कन्दौ । मनः । विऽपथम् ॥ २६ ॥

मातरिश्वा । च । पवमानः । च । विपथऽवाहौ । वातः । सारथिः । रेष्मा । प्रऽतोदः ।
कीर्तिः । च । यशः । च । पुरःऽसरौ ॥२७॥

आ । एनम् । कीर्तिः । गच्छति । आ । यशः । गच्छति । यः । एवम् । वेद ॥ २८ ॥ [४]

[३] तृतीयः पर्यायः

(१-११) एकादशर्चस्यास्य पर्यायस्य. (१) प्रथमर्चः पिपीलिकमध्या गायत्री, (२) द्वितीयायाः साम्न्युष्णिक्, (३) तृतीयायाः याजुषी जगती, (४) चतुर्थ्याः द्विपदार्च्युष्णिक्, (५) पञ्चम्या आर्ची बृहती, (६) षष्ठ्या आसुर्यनुष्टुप्, (७) सप्तम्याः साम्नी गायत्री, (८) अष्टम्या आसुरी पङ्क्तिः, (९) नवम्या आसुरी जगती, (१०) दशम्याः प्राजापत्या त्रिष्टुप्, (११) एकादश्याश्च विराड्गायत्री छन्दांसि ॥

स संवत्सरमूर्ध्वोऽतिष्ठत्तं देवा अब्रुवन्व्रात्य किं नु तिष्ठसीति ॥१॥

सः । सम्ऽवत्सरम् । ऊर्ध्वः । अतिष्ठत् । तम् । देवाः । अब्रुवन् । व्रात्य । किम् । नु । तिष्ठसि । इति ।



**XV.2.24** Surely he becomes a favourite of the śyaita Sāman and the naudhasa Sāman, of the seven-seers and of the sparkling Soma (the cure-juice). In the northern quarter he has a pleasing abode.

**XV.2.25** The brightening becomes his sweet-heart, the thunder-cloud his praise-singer, comprehension his garment, day his turban, night his hair, two rays his two ear-rings, the brightness (of stars) his jewel;

**XV.2.26** What is heard and what is listened (become) his two footmen, the mind his war-chariot;

**XV.2.27** The atmospheric wind and the purifying wind (become) his two chariot-horses, the gale his charioteer and the tempest his whip;

**XV.2.28** Glory and fame become his two forerunners; to him comes the glory, (to him) comes the fame, who knows it thus.

PARYĀYA - III

## Vrātyāḥ

**XV.3.1** He remained standing erect for a year. The enlightened ones asked him : "O wandering saint, why do you remain standing?"

सोऽब्रवीदासन्दीं मे सं भरन्त्विति ॥२॥
तस्मै व्रात्यायासन्दीं समभरन् ॥३॥
तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ॥४॥
बृहच्च रथंतरं चानूच्येऽ आस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्येऽ ॥५॥
ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ॥६॥
वेद आस्तरणं ब्रह्मोपबर्हणम् ॥७॥
सामासाद उद्गीथोऽपश्रयः ॥८॥
तामासन्दीं व्रात्य आरोहत् ॥९॥

सः । अब्रवीत् । आऽसन्दीम् । मे । सम् । भरन्तु । इति ॥ २ ॥
तस्मै । व्रात्याय । आऽसन्दीम् । सम् । अभरन् ॥ ३ ॥
तस्याः । ग्रीष्मः । च । वसन्तः । च । द्वौ । पादौ । आस्ताम् । शरत् । च । वर्षाः । च । द्वौ ॥
बृहत् । च । रथम्ऽतरम् । च । अनूच्येऽ इति । आस्ताम् । यज्ञायज्ञियम् । च ।
वामऽदेव्यम् । च । तिरश्च्येऽ इति ॥ ५ ॥
ऋचः । प्राञ्चः । तन्तवः । यजूंषि । तिर्यञ्चः ॥ ६ ॥
वेदः । आऽस्तरणम् । ब्रह्म । उपऽबर्हणम् ॥ ७ ॥
साम । आऽसादः । उत्ऽगीथः । अपऽश्रयः ॥ ८ ॥
ताम् । आऽसन्दीम् । व्रात्यः । आ । अरोहत् ॥ ९ ॥



XV.3.2 He said : "Let them bring a settee for me."

XV.3.3 For that wandering saint they brought a settee.

XV.3.4 Summer and spring were the two feet of that (settee). Autumn and the rains were the other two feet.

XV.3.5 The bṛhat Sāman and the rathāntara Sāman were the two elbow-pieces and the yajnāyajniya Sāman and the Vāmadevya Sāman were the two cross-boards.

XV.3.6 The Ṛk verses were the lengthwise strings and the Yajus (sacrificial formulas) the crosswise strings.

XV.3.7 The Veda (the sacred knowledge) was the carpet and the prayer the pillow.

XV.3.8 The Sāman was the seat and Udgītha (Saman Chanting) the support.

XV.3.9 The Vrātya (the wandering saint) ascended that settee.

तस्य देवजनाः परिष्कन्दा आसन्त्संकल्पाः प्रहाय्या३ विश्वानि भूतान्युपसदः ॥१०॥
विश्वान्येवास्य भूतान्युपसदो भवन्ति य एवं वेद ॥११॥

तस्य । देवऽजनाः । परिऽस्कन्दाः । आसन् । सम्ऽकल्पाः । प्रऽहाय्या३ः । विश्वानि । भूतानि । उपऽसदः ॥ १० ॥

विश्वानि । एव । अस्य । भूतानि । उपऽसदः । भवन्ति । यः । एवम् । वेद ॥ ११ ॥

[४] चतुर्थः पर्यायः

(१-१८) अष्टादशर्चस्यास्य पर्यायस्य (१, १३, १६) प्रथमात्रयोदशीषोडशीनामृचां दैवी जगती, (२, ८) द्वितीयाष्टम्योरार्च्यनुष्टुप्, (३, १२) तृतीयाद्वादश्योर्द्विपदा प्राजापत्या जगती, (४, ७, १०) चतुर्थीसप्तमीदशमीनां प्राजापत्या गायत्री, (५) पञ्चम्याः प्राजापत्या पङ्क्तिः, (६) षष्ठ्या आर्षी जगती, (९) नवम्या आर्षी त्रिष्टुप् (भौमा), (११) एकादश्याः साम्नी त्रिष्टुप्, (१४) चतुर्दश्याः प्राजापत्या बृहती, (१५, १८) पञ्चदश्यष्टादश्योर्द्विपदार्ची पङ्क्तिः, (१७) सप्तदश्याश्चार्च्युष्णिक् छन्दांसि ॥

तस्मै प्राच्या दिशः ॥१॥
वासन्तौ मासौ गोप्तारावकुर्वन्बृहच्च रथंतरं चानुष्ठातारौ ॥२॥
वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च
रथंतरं चानु तिष्ठतो य एवं वेद ॥३॥ (१)
तस्मै दक्षिणाया दिशः ॥४॥
ग्रैष्मौ मासौ गोप्तारावकुर्वन्यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ॥५॥

तस्मै । प्राच्याः । दिशः ॥ १ ॥

वासन्तौ । मासौ । गोप्तारौ । अकुर्वन् । बृहत् । च । रथम्ऽतरम् । च । अनुऽस्थातारौ ॥२॥

वासन्तौ । एनम् । मासौ । प्राच्याः । दिशः । गोपायतः । बृहत् । च । रथम्ऽतरम् । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ ३ ॥

तस्मै । दक्षिणायाः । दिशः ॥ ४ ॥

ग्रैष्मौ । मासौ । गोप्तारौ । अकुर्वन् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । अनुऽस्थातारौ ॥



**XV.3.10** The godly people became his footmen, solemn vows his messengers and all the beings his attendants.

**XV.3.11** All the beings become his attendants, whoever knows it thus.

PARYĀYA IV

**XV.4.1** For him of (from) the eastern quarter;

**XV.4.2** They made the two spring-months protectors and the bṛhat and the rathāntara Sāmans attendants.

**XV.4.3** The two spring months protect (him) from the eastern quarter and the bṛhat and the rathāntara Sāmans attend him, who knows it thus.

**XV.4.4** For him of (from) the southern quarter;

**XV.4.5** They made the two summer-months protectors and the yajnāyajniya and the vāmadevya Sāmans attendants.

ग्रैष्मावेनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च
वामदेव्यं चानु तिष्ठतो य एवं वेद ॥६॥ (२)
तस्मै प्रतीच्या दिशः ॥७॥
वार्षिकौ मासौ गोप्तारावकुर्वन्वैरूपं च वैराजं चानुष्ठातारौ ॥८॥
वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च
वैराजं चानु तिष्ठतो य एवं वेद ॥९॥ (३)
तस्मा उदीच्या दिशः ॥१०॥
शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ॥११॥
शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं च
नौधसं चानु तिष्ठतो य एवं वेद ॥१२॥ (४)

ग्रैष्मौ । एनम् । मासौ । दक्षिणायाः । दिशः । गोपायतः । यज्ञायज्ञियम । च । वामऽदे-
व्यम् । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ ६ ॥
तस्मै । प्रतीच्याः । दिशः ॥ ७ ॥
वार्षिकौ । मासौ । गोप्तारौ । अकुर्वन् । वैरूपम् । च । वैराजम् । च । अनुऽस्थातारौ ॥
वार्षिकौ । एनम् । मासौ । प्रतीच्याः । दिशः । गोपायतः । वैरूपम् । च । वैराजम् ।
च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ ९ ॥
तस्मै । उदीच्याः । दिशः ॥ १० ॥
शारदौ । मासौ । गोप्तारौ । अकुर्वन् । श्यैतम् । च । नौधसम् । च । अनुऽस्थातारौ ।
शारदौ । एनम् । मासौ । उदीच्याः । दिशः । गोपायतः । श्यैतम् । च । नौधसम् ।
च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ १२ ॥



XV.4.6 The two summer-months protect (him) from the southern quarter and the yajnāyajniya Sāmans attend him, who knows it thus.

XV.4.7 For him of (from) the western quarter;

XV.4.8 They made the two rainy months protectors and the Vairūpa and the Vairāja Sāmans attendants.

XV.4.9 The two rainy months protect (him) from the western quarter and the vairūpa and the vairāja Sāmans attend him, who knows it thus.

XV.4.10 For him of (from) the northern quarter;

XV.4.11 They made the two autumn months protectors and the śyaita and the naudhasa Sāmans attendants.

XV.4.12 The two autumn months protect (him) from the northern quarter and the śyaita and the naudhasa Sāmans attend him, who knows it thus.

तस्मै ध्रुवाया दिशः ॥१३॥
हैमनौ मासौ गोप्तारावकुर्वन्भूमिं चाग्निं चानुष्ठातारौ ॥१४॥
हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो
भूमिश्चाग्निश्चानु तिष्ठतो य एवं वेद ॥१५॥ (५)
तस्मा ऊर्ध्वाया दिशः ॥१६॥
शैशिरौ मासौ गोप्तारावकुर्वन्दिवं चादित्यं चानुष्ठातारौ ॥१७॥
शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो
द्यौश्चादित्यश्चानु तिष्ठतो य एवं वेद ॥१८॥ (६)

तस्मै । ध्रुवायाः । दिशः ॥ १३ ॥

हैमनौ । मासौ । गोप्तारौ । अकुर्वन् । भूमिम् । च । अग्निम् । च । अनुऽस्थातारौ ॥१४॥

हैमनौ । एनम् । मासौ । ध्रुवायाः । दिशः । गोपायतः । भूमिः । च । अग्निः । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥१५॥

तस्मै । ऊर्ध्वायाः । दिशः ॥ १६ ॥

शैशिरौ । मासौ । गोप्तारौ । अकुर्वन् । दिवम् । च । आदित्यम् । च । अनुऽस्थातारौ ॥

शैशिरौ । एनम् । मासौ । ऊर्ध्वायाः । दिशः । गोपायतः । द्यौः । च । आदित्यः । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ १८ ॥

[ ५ ] पञ्चमः पर्यायः

(१–१६) षोडशर्चस्यास्य पर्यायस्य (१) प्रथमर्चस्त्रिपदा समविषमा गायत्री, (२) द्वितीयायास्त्रिपदा भुरिगार्ची त्रिष्टुप्, [३, ५ (२), ७ (२), ९ (२), ११ (२), १३ (२), १६] तृतीयायाः पञ्चमीसप्तमीनवम्येकादशीत्रयोदशीनां द्वितीयावसानर्चां षोडश्याश्च द्विपदा प्राजापत्यानुष्टुप्, (४) चतुर्थ्यास्त्रिपदा स्वराट् प्राजापत्या पङ्क्तिः, [५ (१), ७ (१), ९ (१), १३ (१)] पञ्चमीसप्तमीनवमीत्रयोदशीनां प्रथमावसानर्चां त्रिपदा ब्राह्मी गायत्री, (६, ८, १२) षष्ठ्यष्टमीद्वादशीनां त्रिपदा ककुप्, (१०, १४) दशमीचतुर्दश्योर्भुरिग्विषमा गायत्री, [ ११ (१) ] एकादश्याः प्रथमावसानर्चो निचृद्ब्राह्मी गायत्री, (१५) पञ्चदश्याश्च विराट् छन्दांसि ॥

तस्मै प्राच्या दिशो अन्तर्देशाद्भवमिष्वासमनुष्ठातारमकुर्वन् ॥१॥

तस्मै । प्राच्याः । दिशः । अन्तःऽदेशात् । भवम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥



XV.4.13 For him of (from) the nadir quarter,

XV.4.14 They made the two winter-months protectors and earth and fire attendants.

XV.4.15 The two winter-months protect (him) from the nadir quarter and earth and fire attend him, who knows it thus.

XV.4.16 For him of (from) the zenith quarter,

XV.4.17 they made the two frosty months protectors and sky and the sun attendants.

XV.4.18 The two frosty months protect (him) from the zenith quarter and sky and the sun attend him, who knows it thus.

PARYĀYA - V

## Rudraḥ

XV.5.1 For him, from the intermediate region of the eastern quarter, they have made the archer Bhava (the Lord of existence) the attendant.

भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ॥२॥
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥३॥ (१)
तस्मै दक्षिणाया दिशो अन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥४॥
शर्व एनमिष्वासो दक्षिणाया दिशो अन्तर्देशादनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥५॥ (२)
तस्मै प्रतीच्या दिशो अन्तर्देशात्पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ॥६॥
पशुपतिरेनमिष्वासः प्रतीच्या दिशो अन्तर्देशादनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥७॥ (३)

भवः । एनम् । इषुऽआसः । प्राच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति ॥२॥
न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य । पशून् । न । समानान् ।
हिनस्ति । यः । एवम् । वेद ॥ ३ ॥
तस्मै । दक्षिणायाः । दिशः । अन्तःऽदेशात् । शर्वम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥
शर्वः । एनम् । इषुऽआसः । दाक्षिणायाः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु ।
तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०॥ ५ ॥
तस्मै । प्रतीच्याः । दिशः । अन्तःऽदेशात् । पशुऽपतिम् । इषुऽआसम् । अनुऽस्थातारम् ।
अकुर्वन् ॥ ६ ॥
पशुऽपतिः । एनम् । इषुऽआसः । प्रतीच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता ।
अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०॥७ ॥



**XV.5.2** The archer Bhava stands as an attendant to attend him from the intermediate region of the eastern quarter. Neither Śarva, nor Bhava, nor Īśāna -

**XV.5.3** does any harm to him, who knows it thus, nor to his animals, nor to his kinsmen.

**XV.5.4** For him, from the intermediate region of the southern quarter, they have made the archer Śarva (the Lord of destruction) the attendant.

**XV.5.5** The archer Śarva stands as an attendant to attend him from the intermediate region of the southern quarter. Neither Śarva, nor Bhava, nor Īśāna - does harm to him, who knows it thus, nor to his animals, nor to his kinsmen.

**XV.5.6** For him, from the intermediate region of the western quarter, they have made the archer Paśupati (the Lord of animals) the attendant.

**XV.5.7** The archer Paśupati stands as an attendant to attend him from the intermediate region of the western quarter. Neither Śarva, nor Bhava, nor Īśāna - does any harm to him, who knows it thus, nor to his animals, nor to his kinsmen.

तस्मा उदीच्या दिशो अन्तर्देशादुग्रं देवमिष्वासमनुष्ठातारमकुर्वन् ॥८॥
उग्र एनं देव इष्वास उदीच्या दिशो अन्तर्देशादनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥९॥ (७)
तस्मै ध्रुवाया दिशो अन्तर्देशाद्रुद्रमिष्वासमनुष्ठातारमकुर्वन् ॥१०॥
रुद्र एनमिष्वासो ध्रुवाया दिशो अन्तर्देशादनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥११॥ (७)
तस्मा ऊर्ध्वाया दिशो अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥१२॥
महादेव एनमिष्वास ऊर्ध्वाया दिशो अन्तर्देशादनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ।
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥१३॥ (७)
तस्मै सर्वेभ्यो अन्तर्देशेभ्य ईशानमिष्वासमनुष्ठातारमकुर्वन् ॥१४॥

तस्मै । उदीच्याः । दिशः । अन्तःऽदेशात् । उग्रम् । देवम् । इषुऽआसम् । अनुऽस्थातारम् ।
अकुर्वन् ॥ ८ ॥
उग्रः । एनम् । देवः । इषुऽआसः । उदीच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता ।
अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०॥ ९ ॥
तस्मै । ध्रुवायाः । दिशः । अन्तःऽदेशात् । रुद्रम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥
तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०। ॥ ११ ॥
तस्मै । ऊर्ध्वायाः । दिशः । अन्तःऽदेशात् । महाऽदेवम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥
महाऽदेवः । एनम् । इषुऽआसः । ऊर्ध्वायाः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता ।
अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।० ॥१३॥
तस्मै । सर्वेभ्यः । अन्तःऽदेशेभ्यः । ईशानम् । इषुऽआसम । अनुऽस्थातारम् । अकुर्वन् ॥१४ ॥



**XV.5.8** For him, from the intermediate region of the northern quarter, they have made the archer Ugra deva (the fierce deity) the attendant.

**XV.5.9** The archer Ugra deva stands as an attendant to attend him from the intermediate region of the northern quarter. Neither Śarva, nor Bhava, nor Īśāna - does any harm to him, who knows it thus, nor to his animals, nor to his kinsman.

**XV.5.10** For him, from the intermediate region of the nadir quarter, they have made the archer Rudra (the terrible punisher) the attendant.

**XV.5.11** The archer Rudra stands as an attendant to attend him from the intermediate region of the nadir quarter. Neither Śarva, nor Bhava, nor Īśāna - does any harm to him, who knows it thus, nor to his animals, nor to his kinsmen.

**XV.5.12** For him, from the intermediate region of the zenith quarter, they have made the archer Mahādeva (the great Lord) the attendant.

**XV.5.13** The archer Mahādeva stands as an attendant to attend him from the intermediate region of the zenith quarter. Neither Śarva, nor Bhava, nor Īśāna - does any harm to him, who knows it thus, nor to his animals, nor to his kinsmen.

**XV.5.14** For him, from all the intermediate regions, they have made the archer Īśāna (the master Lord) the attendant.

ईशान एनमिष्वासः सर्वेभ्यो अन्तर्देशेभ्योऽनुष्ठातानु
तिष्ठति नैनं शर्वो न भवो नेशानः ॥१५॥
नास्य पशून्न समानान्हिनस्ति य एवं वेद ॥१६॥ (७)

ईशानः । एनम् । इषुऽआसः । सर्वेभ्यः । अन्तःऽदेशेभ्यः । अनुऽस्थाता । अनु । तिष्ठति ॥
न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य । पशून् । न । समानान् ।
हिनस्ति । यः । एवम् । वेद ॥ १६ ॥

[६] षष्ठः पर्यायः

(१-२६) षड्विंशत्यृचस्यास्य पर्यायस्य (१, ४) प्रथमाचतुर्थ्योरासुरी पङ्क्तिः, (२, १७) द्वितीयासप्तदश्योरार्ची पङ्क्तिः, (३) तृतीयाया आर्ची पङ्क्तिः, (५, ११) पञ्चम्येकादश्योः साम्नी त्रिष्टुप्, (६, १२) षष्ठीद्वादश्योर्द्विपदा बृहती, (७, १०, १३, १६, २४) सप्तमीदशमीत्रयोदशीषोडशीचतुर्विंशीनामासुरी बृहती, (८) अष्टम्याः साम्नी पङ्क्तिः, (९) नवम्याः प्राजापत्या त्रिष्टुप्, (१४, २३) चतुर्दशीत्रयोविंश्योरार्ची त्रिष्टुप्, (१५, १८) पञ्चदश्यष्टादश्योर्विराड्जगती, (१९) एकोनविंश्या आर्च्युष्णिक्, (२०) विंश्याः साम्न्यनुष्टुप्, (२१) एकविंश्या आर्ची बृहती, (२२) द्वाविंश्याः परोष्णिक्, (२५) पञ्चविंश्या आर्च्यनुष्टुप्, (२६) षड्विंश्याश्च विराड्बृहती छन्दांसि ॥

स ध्रुवां दिशमनु व्यचलत् ॥१॥
तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचलन् ॥२॥
भूमेश्च वै सोऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां
च वीरुधां च प्रियं धाम भवति य एवं वेद ॥३॥ (१)
स ऊर्ध्वां दिशमनु व्यचलत् ॥४॥
तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानुव्यचलन् ॥५॥

सः । ध्रुवाम् । दिशम् । अनु । वि । अचलत् ॥ १ ॥
तम् । भूमिः । च । अग्निः । च । ओषधयः । च । वनस्पतयः । च । वानस्पत्याः ।
च । वीरुधः । च । अनुऽव्यचलन् ॥ २ ॥
भूमेः । च । वै । सः । अग्नेः । च । ओषधीनाम् । च । वनस्पतीनाम् । च । वानस्पत्या-
नाम् । च । वीरुधाम् । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥
सः । ऊर्ध्वाम् । दिशम् । अनु । वि । अचलत् ॥ ४ ॥
तम् । ऋतम् । च । सत्यम् । च । सूर्यः । च । चन्द्रः । च । नक्षत्राणि । च । अनुऽव्यचलन् ॥



**XV.5.15** The archer Iśāna stands as an attendant to attend him from all the intermediate regions. Neither Śarva, nor Bhava, nor Iśāna -

**XV.5.16** does any harm to him, who knows it thus, nor to his animals, nor to his kinsmen.

PARYĀYA - VI

## Vrātyāḥ

**XV.6.1** He started moving towards the nadir quarter.

**XV.6.2** Earth and fire, herbs and trees, plants and shrubs started following him.

**XV.6.3** Surely he, who knows it thus, becomes a pleasing abode of earth and fire of herbs and trees and of plants and shrubs.

**XV.6.4** He started moving towards the zenith quarter.

**XV.6.5** Righteousness and truth, sun and moon, and stars started following him.

ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च
नक्षत्राणां च प्रियं धाम भवति य एवं वेद ॥६॥ (१)
स उत्तमां दिशमनु व्यचलत् ॥७॥
तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ॥८॥
ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ॥९॥ (१)
स बृहतीं दिशमनुव्यचलत् ॥१०॥
तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ॥११॥
इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च
प्रियं धाम भवति य एवं वेद ॥१२॥ (७)
स परमां दिशमनु व्यचलत् ॥१३॥

ऋतस्य । च । वै । सः । सत्यस्य । च । सूर्यस्य । च । चन्द्रस्य । च । नक्षत्राणाम् ।
च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ६ ॥

सः । उत्ऽतमाम् । दिशम् । अनु । वि । अचलत् ॥ ७ ॥

तम् । ऋचः । च । सामानि । च । यजूंषि । च । ब्रह्म । च । अनुऽव्यचलन् ॥ ८ ॥

ऋचाम् । च । वै । सः । साम्नाम् । च । यजुषाम । च । ब्रह्मणः । च । प्रियम् । धाम ।
भवति । यः । एवम् । वेद ॥ ९ ॥ [२]

सः । बृहतीम् । दिशम् । अनु । वि । अचलत् ॥ १० ॥

तम् । इतिहऽआसः । च । पुराणम् । च । गाथाः । च । नाराशंसीः । च । अनुऽव्यचलन् ॥

इतिहऽआसस्य । च । वै । सः । पुराणस्य । च । गाथानाम् । च । नाराशंसीनाम् ।
च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १२ ॥

सः । परमाम् । दिशम् । अनु । वि । अचलत् ॥ १३ ॥



**XV.6.6** Surely he, who knows it thus, becomes a pleasing anode of righteousness and truth, of sun and moon and of stars.

**XV.6.7** He started moving towards the uppermost quarter.

**XV.6.8** Ṛk verses and Sāman chants, yajus (sacrificial formulas) and the sacred knowledge started following him.

**XV.6.9** Surely he, who knows it thus, becomes a pleasing abode of Ṛk verses and Sāman chants, of Yajus and the sacred knowledge.

**XV.6.10** He started moving towards the lofty quarter.

**XV.6.11** Itihāsa (history) and Purāṇa (stories of ancient times), Gāthās (legends) and Nārāśansīs (biographies of men) started following him.

**XV.6.12** Surely he, who knows it thus, becomes a pleasing abode of Itihāsa and Purānās, of Gāthas and Narasansīs.

**XV.6.13** He started moving towards the supreme quarter.

तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥१४॥
आहवनीयस्य च वै स गार्हपत्यस्य च दक्षिणाग्नेश्च यज्ञस्य च
यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ॥१५॥ (७)
सोनादिष्टां दिशमनु व्यचलत् ॥१६॥
तमृतवश्चार्तवाश्च लोकाश्च लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चानुव्यचलन् ॥१७॥
ऋतूनां च वै स आर्तवानां च लोकानां च लौक्यानां च मासानां
चार्धमासानां चाहोरात्रयोश्च प्रियं धाम भवति य एवं वेद ॥१८॥ (७)
सोनावृत्तां दिशमनु व्यचलत्ततो नावर्त्स्यन्नमन्यत ॥१९॥
तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ॥२०॥

तम् । आऽहवनीयः । च । गार्हऽपत्यः । च । दक्षिणऽअग्निः । च । यज्ञः । च । यजमानः । च । पशवः । च । अनुऽव्यचलन् ॥ १४ ॥

आऽहवनीयस्य । च । वै । सः । गार्हऽपत्यस्य । च । दक्षिणऽअग्नेः । च । यज्ञस्य । च । यजमानस्य । च । पशूनाम् । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १५ ॥

सः । अनाऽदिष्टाम् । दिशम् । अनु । वि । अचलत् ॥ १६ ॥

तम् । ऋतवः । च । आर्तवाः । च । लोकाः । च । लौक्याः । च । मासाः च । अर्ध-ऽमासाः । च । अहोरात्रे इति । च । अनुऽव्यचलन् ॥ १७ ॥

ऋतूनाम् । च । वै । सः । आर्तवानाम् । च । लोकानाम् । च । लौक्यानाम् । च । मासानाम् । च । अर्धऽमासानाम् । च । अहोरात्रयोः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १८ ॥

सः । अनाऽवृत्ताम् । दिशम् । अनु । वि । अचलत् । ततः । न । आऽवर्त्स्यन् । अमन्यत ॥

तम् । दितिः । च । अदितिः । च । इडा । च । इन्द्राणी । च । अनुऽव्यचलन् ॥२०॥



**XV.6.14** Āhavanīya (sacrificial fire) and garhapatya (house-holder's fire), dakśināgni (southern fire) and the sacrifice, the sacrificer and the animals started following him.

**XV.6.15** Surely he, who knows it thus, becomes a pleasing abode of Āhavanīya and garhapatya, of dakśināgni and the sacrifice, and of the sacrificer and the animals.

**XV.6.16** He started moving towards the unspecified quarter.

**XV.6.17** Seasons and groups of seasons, Lokas (people) and Laukyas (communities), months and half months, days and nights started following him.

**XV.6.18** Surely he, who knows it thus, becomes a pleasing abode of seasons and groups of seasons, of Lokas and Lokyas, of months and half-months, and of days and nights.

**XV.6.19** He started moving towards the quarter of no return. He resolved not to return therefrom.

**XV.6.20** Diti (bondage) and Aditi (freedom), Iḍa and Indrāṇi started following him.

दितेश्च वै सोदितेश्चेडायाश्चेन्द्राण्याश्च प्रियं धाम भवति य एवं वेद ॥२१॥ (७)
स दिशोनु व्यचलत्तं विराडनु व्यचलत्सर्वे च देवाः सर्वाश्च देवताः ॥२२॥
विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानां प्रियं धाम भवति य एवं वेद ॥२३॥ (८)
स सर्वानन्तर्देशाननु व्यचलत् ॥२४॥
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् ॥२५॥
प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य
च प्रियं धाम भवति य एवं वेद ॥२६॥ (९)

दितेः । च । वै । सः । अदितेः । च । इडायाः । च । इन्द्राण्याः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २१ ॥

सः । दिशः । अनु । वि । अचलत् । तम् । विऽराट् । अनु । वि । अचलत् । सर्वे । च । देवाः । सर्वाः । च । देवताः ॥ २२ ॥

विऽराजः । च । वै । सः । सर्वेषाम् । च । देवानाम् । सर्वासाम् । च । देवतानाम् । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २३ ॥

सः । सर्वान् । अन्तःऽदेशान् । अनु । वि । अचलत् ॥ २४ ॥

तम् । प्रजाऽपतिः । च । परमेऽस्थी । च । पिता । च । पितामहः । च । अनुऽव्यचलन् ॥

प्रजाऽपतेः । च । वै । सः । परमेऽस्थिनः । च । पितुः । च । पितामहस्य । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २६ ॥



**XV.6.21** Surely he, who knows it thus, becomes a pleasing abode of Diti and Aditi, of Iḍa and Indrāṇi.

**XV.6.22** He started moving towards the directions. Virāj (the cosmic cow) started following him, and also all the enlightened ones and all the bounties of Nature.

**XV.6.23** Surely he, who knows it thus, becomes a pleasing abode of virāj, of all the enlightened ones and of all the bounties of Nature.

**XV.6.24** He started moving towards all the intermediate regions.

**XV.6.25** Prajāpati (Lord of creatures) and Parameṡthi (the Lord dwelling in the highest abode), the father and the grandfather started following him.

**XV.6.26** Surely he, who knows it thus, becomes a pleasing abode of Prajāpati and of Parameṡthi, of the father and the grandfather.

[७] सप्तमः पर्यायः

(१–५) पञ्चर्चस्यास्य पर्यायस्य (१) प्रथमर्चस्त्रिपदा निचृद्गायत्री, (२) द्वितीयाया एकपदा विराड्बृहती, (३) तृतीयाया विराडुष्णिक्, (४) चतुर्थ्या एकपदा गायत्री, (५) पञ्चम्याश्च पङ्क्तिश्छन्दांसि ॥

स महिमा सद्रुर्भूत्वान्तं पृथिव्या अगच्छत्स समुद्रोऽभवत् ॥१॥
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा च वर्षं भूत्वानुव्यवर्तयन्त ॥२॥
ऐनमापो गच्छन्त्यैनं श्रद्धा गच्छत्यैनं वर्षं गच्छति य एवं वेद ॥३॥
तं श्रद्धा च यज्ञश्च लोकश्चान्नं चान्नाद्यं च भूत्वाभिपर्यावर्तन्त ॥४॥
ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ॥५॥

सः । महिमा । सद्रुः । भूत्वा । अन्तम् । पृथिव्याः । अगच्छत् । सः । समुद्रः । अभवत् ॥

तम् । प्रजाऽपतिः । च । परमेऽस्थी । च । पिता । च । पितामहः । च । आपः । च । श्रद्धा । च । वर्षम् । भूत्वा । अनुऽव्यवर्तयन्त ॥ २ ॥

आ । एनम् । आपः । गच्छन्ति । आ । एनम् । श्रद्धा । गच्छति । आ । एनम् । वर्षम् । गच्छति । यः । एवम् । वेद ॥ ३ ॥

तम् । श्रद्धा । च । यज्ञः । च । लोकः । च । अन्नम् । च । अन्नऽअद्यम् । च । भूत्वा । अभिऽपर्यावर्तन्त ॥ ४ ॥

आ । एनम् । श्रद्धा । गच्छति । आ । एनम् । यज्ञः । गच्छति । आ । एनम् । लोकः । गच्छति । आ । एनम् । अन्नम् । गच्छति । आ । एनम् । अन्नऽअद्यम् । गच्छति । यः । एवम् । वेद ॥ ५ ॥



PARYĀYA - VII

## Vrātyaḥ

**XV.7.1** He, the majesty personified, becoming fluid went to the end of the earth. He becomes Ocean.

**XV.7.2** The Lord of the creatures, and the Lord dwelling in the highest abode, and the father, and the grand-father, the waters and faith, taking the form of the rain, followed him carefully.

**XV.7.3** Water comes to him, faith cones to him, the rain comes to him, who knows it thus.

**XV.7.4** Faith and sacrifice and free movement turned towards and surrounded him taking the form of food and edibles.

**XV.7.5** To him, who knows it thus, come faith and sacrifice; to him comes free movement; to him cones the food; to him come the edibles.

[८] अष्टमः पर्यायः

(१-३) वृषस्यास्य पर्यायस्य प्रथमर्चः साम्न्युष्णिक्, (२) द्वितीयायाः प्राजापत्यानुष्टुप्, (३) तृतीयायाश्चार्ची पङ्क्तिश्छन्दांसि ॥

सोऽरज्यत ततो राजन्योऽजायत ॥१॥

स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् ॥२॥

विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च प्रियं धाम भवति य एवं वेद ॥३॥

सः । अरज्यत । ततः । राजन्यः । अजायत ॥ १ ॥

सः । विशः । सऽबन्धून् । अन्नम् । अन्नऽअद्यम् । अभिऽउदतिष्ठत् ॥ २ ॥

विशाम् । च । वै । सः । सऽबन्धूनाम् । च । अन्नस्य । च । अन्नऽअद्यस्य । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥

[९] नवमः पर्यायः

(१-३) वृषस्यास्य पर्यायस्य (१) प्रथमर्च आसुरी जगती, (२) द्वितीयाया आर्ची गायत्री, (३) तृतीयायाश्चार्ची पङ्क्तिश्छन्दांसि ॥

स विशोऽनु व्यचलत् ॥१॥

तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् ॥२॥

सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च प्रियं धाम भवति य एवं वेद ॥३॥

सः । विशः । अनु । वि । अचलत् ॥ १ ॥

तम् । सभा । च । सम्ऽइतिः । च । सेना । च । सुरा । च । अनुऽव्यचलन् ॥ २ ॥

सभायाः । च । वै । सः । सम्ऽइतेः । च । सेनायाः । च । सुरायाः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥



PARYĀYA - VIII

## Vrātyāḥ

XV.8.1 He became exulted; therefrom sprang the rājanya (ruling power).

XV.8.2 He rose up to gain people along with the kinsmen, food and edibles.

XV.8.3 He, who knows it thus, becomes the pleasing abode of the people along with the kinsmen, of food and the edibles.

PARYĀYA - IX

## Vrātyāḥ

XV.9.1 He followed the wishes of the people.

XV.9.2 The assembly, the war-council, the army, and the treasury (surā) followed him.

XV.9.3 He, who knows it thus, becomes the pleasing abode of the assembly, of the war-council, of the army and of the treasury.

[ १० ] दशमः पर्यायः

(१-११) एकादशर्चस्यास्य पर्यायस्य (१) प्रथमर्चो त्रिपदा साम्नी बृहती, (२) द्वितीयायास्त्रिपदार्ची पङ्क्तिः, (३) तृतीयाया द्विपदा प्राजापत्या पङ्क्तिः, (४) चतुर्थ्यास्त्रिपदा वर्धमाना गायत्री, (५) पञ्चम्यास्त्रिपदा साम्नी बृहती, (६, ८, १०) षष्ठ्यष्टमीदशमीनां द्विपदासुरी गायत्री, (७, ९) सप्तमीनवम्योः साम्न्युष्णिक्, (११) एकादश्याश्चासुरी बृहती छन्दांसि ॥

तद्यस्यैवं विद्वान्व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् ॥१॥
श्रेयांसमेनमात्मनो मानयेत्तथा क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते ॥२॥
अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ॥३॥
अतो वै बृहस्पतिमेव ब्रह्म प्र विशत्विन्द्रं क्षत्रं तथा वा इति ॥४॥
अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ॥५॥
इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ॥६॥
अयं वा उ अग्निर्ब्रह्मासावादित्यः क्षत्रम् ॥७॥
ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ॥८॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । राज्ञः । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

श्रेयांसम् । एनम् । आत्मनः । मानयेत् । तथा । क्षत्राय । न । आ । वृश्चते । तथा । राष्ट्राय । न । आ । वृश्चते ॥ २ ॥

अतः । वै । ब्रह्म । च । क्षत्रम् । च । उत् । अतिष्ठताम् । ते इति । अब्रूताम् । कम् । प्र । विशाव । इति ॥ ३ ॥

अतः । वै । बृहस्पतिम् । एव । ब्रह्म । प्र । विशतु । इन्द्रम् । क्षत्रम् । तथा । वै । इति ॥४॥

अतः । वै । बृहस्पतिम् । एव । ब्रह्म । प्र । अविशत् । इन्द्रम् । क्षत्रम् ॥ ५ ॥

इयम् । वै । ऊं इति । पृथिवी । बृहस्पतिः । द्यौः । एव । इन्द्रः ॥ ६ ॥

अयम् । वै । ऊं इति । अग्निः । ब्रह्म । असौ । आदित्यः । क्षत्रम् ॥ ७ ॥

आ । एनम् । ब्रह्म । गच्छति । ब्रह्मऽवर्चसी । भवति ॥ ८ ॥



PARYĀYA - X

**XV.10.1** So let the king, to whose dwellings comes such a knowledgeable vow-observing sage as a guest -

**XV.10.2** Consider him as conducive to his welfare and honour him. By doing so he is not cut off from the ruling power; by doing so he is not cut off from the kingdom.

**XV.10.3** From him, verily, sprang up the intellectual power and the ruling power; they said : " Who shall we enter?"

**XV.10.4** From him, let the intellectual power, verily, enter into the lord of knowledge (Brhaspati) and so the ruling power into the resplendent army - chief was the reply.

**XV.10.5** From him, verily, the intellectual power entered into the lord of knowledge and the rulling power into the resplendent army-chief.

**XV.10.6** This earth, verily is Brhaspati (the lord of knowledge) and the heaven itself is the Indra (the resplendent army-chief).

**XV.10.7** Also, this adorable leader (fire), verily, is the intellectual power and the yonder sun is the ruling power.

**XV.10.8** Unto him comes the intellectual power; (and) he becomes lustrous with intellectual power,

यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद ॥९॥
ऐनमिन्द्रियं गच्छतीन्द्रियवान्भवति ॥१०॥
य आदित्यं क्षत्रं दिवमिन्द्रं वेद ॥११॥

यः । पृथिवीम् । बृहस्पतिम् । अग्निम् । ब्रह्म । वेद ॥ ९ ॥

आ । एनम् । इन्द्रियम् । गच्छति । इन्द्रियऽवान् । भवति ॥ १० ॥

यः । आदित्यम् । क्षत्रम् । दिवम् । इन्द्रम् । वेद ॥ ११ ॥

[ ११ ] एकादशः पर्यायः
(१–११) एकादशर्चस्यास्य पर्यायस्य (१) प्रथमर्चो दैवी पङ्क्तिः, (२) द्वितीयाया द्विपदा पूर्वात्रिष्टुबतिशक्वरी,
(३–६, ८) तृतीयादिचतसृणामष्टम्याश्च निचृदार्षी बृहती, (७, ९) सप्तमीनवम्योर्द्विपदा प्राजापत्या
बृहती, (१०) दशम्या भुरिगार्षी बृहती, (११) एकादश्याश्च द्विपदार्च्यनुष्टुप् छन्दांसि ॥

तद्यस्यैवं विद्वान्व्रात्योऽतिथिर्गृहानागच्छेत् ॥१॥
स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्य क्वावात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते प्रियं
तथास्तु व्रात्य यथा ते वशस्तथास्तु व्रात्य यथा ते निकामस्तथास्त्विति ॥२॥
यदेनमाह व्रात्य क्वावात्सीरिति पथ एव तेन देवयानानव रुन्धे ॥३॥
यदेनमाह व्रात्योदकमित्यप एव तेनाव रुन्धे ॥४॥
यदेनमाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षीयांसं कुरुते ॥५॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

स्वयम् । एनम् । अभिऽउदेत्य । ब्रूयात् । व्रात्य । क्व । अवात्सीः । व्रात्य । उदकम् । व्रात्य । तर्पयन्तु । व्रात्य । यथा । ते । प्रियम् । तथा । अस्तु । व्रात्य । यथा । ते । वशः । तथा । अस्तु । व्रात्य । यथा । ते । निऽकामः । तथा । अस्तु । इति ॥ २ ॥

यत् । एनम् । आह । व्रात्य । क्व । अवात्सीः । इति । पथः । एव । तेन । देवऽयानान् । अव । रुन्धे ॥ ३ ॥

यत् । एनम् । आह । व्रात्य । उदकम् । इति । अपः । एव । तेन । अव । रुन्धे ॥ ४ ॥

यत् । एनम् । आह । व्रात्य । तर्पयन्तु । इति । प्राणम् । एव । तेन । वर्षीयांसम् । कुरुते ॥५॥



**XV.10.9** who knows earth as the lord of knowledge and adorable leader (fire) as the intellectual power.

**XV.10.10** Unto him comes great power of sense organs; (and) he becomes strong with bodily power,

**XV.10.11** who knows the sun as ruling power and heaven as the resplendent army-chief.

### PARYĀYA - XI

### Vratyāḥ

**XV.11.1** So to whose dwelling such a knowledgeable vow-observing sage comes as a guest.

**XV.11.2** He himself should get up to greet him and say ; "O Vrātya, where did you stay (for the night)? Vrātya, here is the water (for you). Vrātya, let them entertain you. Vrātya, let it be as it pleases you. Vrātya, let it be as you command. Vrātya, let it be as you desire.

**XV.11.3** When he says ; "Vrātya, where did you stay (for the night", thereby in fact, he secures the paths traversed by the enlightened ones.

**XV.11.4** When he says to him ; "Vrātya, here is water (for you)", thereby, in fact, he secures waters (for himself).

**XV.11.5** When he says to him ; "Vrātya, let them entertain you," thereby he makes his very life-breath longer.

यदे॑नमा॒हु व्रात्य॒ यथा॑ ते प्रि॒यं त॒थास्त्विति॑ प्रि॒यमे॒व तेनाव॑ रु॒न्धे ॥६॥
ऐनं॑ प्रि॒यं ग॑च्छति प्रि॒यः प्रि॒यस्य॑ भवति॒ य ए॒वं वेद॑ ॥७॥ (७)
यदे॑नमा॒हु व्रात्य॒ यथा॑ ते॒ वश॒स्तथा॒स्त्विति॒ वश॑मे॒व तेनाव॑ रु॒न्धे ॥८॥
ऐनं॒ वशो॑ गच्छति व॒शी व॒शिनां॑ भवति॒ य ए॒वं वेद॑ ॥९॥ (९)
यदे॑नमा॒हु व्रात्य॒ यथा॑ ते निका॒मस्त॒थास्त्विति॑ निका॒मे॒व तेनाव॑ रु॒न्धे ॥१०॥
ऐनं॑ निका॒मो ग॑च्छति निका॒मे निका॒मस्य॑ भवति॒ य ए॒वं वेद॑ ॥११॥ (११)

यत् । ए॒न॒म् । आ॒हुः । व्रात्य॑ । यथा॑ । ते॒ । प्रि॒यम् । तथा॑ । अ॒स्तु॒ । इति॑ । प्रि॒यम् । ए॒व । तेन॑ । अव॑ । रु॒न्धे॒ ॥ ६ ॥

आ । ए॒न॒म् । प्रि॒यम् । ग॒च्छ॒ति॒ । प्रि॒यः । प्रि॒यस्य॑ । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥ ७ ॥

यत् । ए॒न॒म् । आ॒हुः । व्रात्य॑ । यथा॑ । ते॒ । वशः॑ । तथा॑ । अ॒स्तु॒ । इति॑ । वश॑म् । ए॒व । तेन॑ । अव॑ । रु॒न्धे॒ ॥ ८ ॥

आ । ए॒न॒म् । वशः॑ । ग॒च्छ॒ति॒ । व॒शी । व॒शिना॑म् । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥९॥

यत् । ए॒न॒म् । आ॒हुः । व्रात्य॑ । यथा॑ । ते॒ । नि॒ऽका॒मः । तथा॑ । अ॒स्तु॒ । इति॑ । नि॒ऽका॒मम् । ए॒व । तेन॑ । अव॑ । रु॒न्धे॒ ॥ १० ॥

आ । ए॒न॒म् । नि॒ऽका॒मः । ग॒च्छ॒ति॒ । नि॒ऽका॒मे । नि॒ऽका॒मस्य॑ । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥

[ १२ ] द्वादशः पर्यायः

(१-११) एकादशर्चस्यास्य पर्यायस्य (१) प्रथमर्चस्त्रिपदा गायत्री, (२) द्वितीयायाः प्राजापत्या बृहती, (३) तृतीयाया भुरिक्प्राजापत्यानुष्टुप्, (४) चतुर्थ्या भुरिक्साम्न्यनुष्टुप्, (५-६, ९-१०) पञ्चमीषष्ठीनवमीदशमीनामासुरी गायत्री, (७, ११) सप्तम्येकादश्योस्त्रिपदा प्राजापत्या त्रिष्टुप्, (८) अष्टम्याश्च विराड्गायत्री छन्दांसि ॥

तद्यस्यै॒वं वि॒द्वान्व्रात्य॒ उद्धृ॑तेष्व॒ग्निष्वधि॑श्रितेऽग्निहो॒त्रेऽति॑थिर्गृ॒हाना॒गच्छे॑त् ॥१॥

तत् । यस्य॑ । ए॒वम् । वि॒द्वान् । व्रात्यः॑ । उद्धृ॑तेषु । अ॒ग्निषु॑ । अधि॑ऽश्रिते । अ॒ग्नि॒ऽहो॒त्रे । अति॑थिः । गृ॒हान् । आ॒ऽगच्छे॑त् ॥ १ ॥



**XV.11.6** When he says to him ;"Vrātya, let it be as it pleases you," thereby he secures what is pleasing to him.

**XV.11.7** To him comes the pleasing one; he, who knows thus becomes dear to his dear one.

**XV.11.8** When he says to him :"Vrātya, let it be as you command", thereby he, verily, secures the command itself.

**XV.11.9** To him comes the command; he, who knows it thus, becomes the Commander of Commanders.

**XV.11.10** When he says to him : "Vrātya, let it be as you desire," thereby he, verily secures the desire itself.

**XV.11.11** To him comes his heart's desire; he, who knows it thus, is set at the heart of his heart's desire.

### PARYĀYA - XII

**XV.12.1** So to whose dwellings comes such a knowledgeable vow-observing sage as a guest when the fires have been kindled up and the fire offering is spread over,

स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्यातिं सृज होष्यामीति ॥२॥
स चातिसृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ॥३॥
स य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ॥४॥
प्र पितृयाणं पन्थां जानाति प्र देवयानम् ॥५॥
न देवेष्वा वृश्चते हुतमस्य भवति ॥६॥
पर्यस्यास्मिँल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ॥७॥
अथ य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥८॥

स्वयम् । एनम् । अभिऽउदेत्य । ब्रूयात् । व्रात्य । अति । सृज । होष्यामि । इति ॥२॥
सः । च । अतिऽसृजेत् । जुहुयात् । न । च । अतिऽसृजेत् । न । जुहुयात् ॥ ३ ॥
सः । यः । एवम् । विदुषा । व्रात्येन । अतिऽसृष्टः । जुहोति ॥ ४ ॥
प्र । पितृऽयानम् । पन्थाम् । जानाति । प्र । देवऽयानम् ॥ ५ ॥
न । देवेषु । आ । वृश्चते । हुतम् । अस्य । भवति ॥ ६ ॥
परि । अस्य । अस्मिन् । लोके । आऽयतनम् । शिष्यते । यः । एवम् । विदुषा । व्रात्येन । अतिऽसृष्टः । जुहोति ॥ ७ ॥
अथ । यः । एवम् । विदुषा । व्रात्येन । अनतिऽसृष्टः । जुहोति ॥ ८ ॥



**XV.12.2** he himself should get up to greet him and say : "O Vrātya, grant me your permission. I shall perform sacrifice."

**XV.12.3** If he permits, he may perform sacrifice; if he does not permit, he should not perform sacrifice.

**XV.12.4** He, whoever permitted by such a knowledgeable vow-observing sage, performs sacrifice,

**XV.12.5** He comes to know thoroughly the path traversed by the elders, (and) the path traversed by the enlightened ones.

**XV.12.6** He is not cut off from the enlightened ones; his offerings are (regarded as duly) made.

**XV.12.7** For him, whoever performs a sacrifice being permitted by such a knowledgeable vow-observing sage, there remains a secure place in this world.

**XV.12.8** And now he, who performs a sacrifice without being permitted by such a knowledgeable vow-observing sage,

न पितृयाणं पन्थां जानाति न देवयानम् ॥९॥
आ देवेषु वृश्चते अहुतमस्य भवति ॥१०॥
नास्यास्मिँल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥११॥

न । पितृऽयानम् । पन्थाम् । जानाति । न । देवऽयानम् ॥ ९ ॥

आ । देवेषु । वृश्चते । अहुतम् । अस्य । भवति ॥ १० ॥

न । अस्य । अस्मिन् । लोके । आऽयतनम् । शिष्यते । यः । एवम् । विदुषा[१] । व्रात्येन । अनतिऽसृष्टः । जुहोति ॥ ११ ॥

[१३] त्रयोदशः पर्यायः

(१-१४) चतुर्दशर्चस्यास्य पर्यायस्य (१) प्रथमर्चः साम्न्युष्णिक्, (२, ६) द्वितीयाषष्ठयोः प्राजापत्यानुष्टुप्, (३, ५, ७) तृतीयापञ्चमीसप्तमीनामासुरी गायत्री, (४, ८) चतुर्थ्यष्टम्योः साम्नी बृहती, (९) नवम्या द्विपदा निचृद्गायत्री, (१०) दशम्या द्विपदा विराड्गायत्री, (११) एकादश्याः प्राजापत्या पङ्क्तिः, (१२) द्वादश्या आसुरी जगती, (१३) त्रयोदश्याः सतःपङ्क्तिः, (१४) चतुर्दश्या अक्षरपङ्क्तिश्छन्दांसि ॥

तद्यस्यैवं विद्वान्व्रात्य एकां रात्रिमतिथिर्गृहे वसति ॥१॥
ये पृथिव्यां पुण्या लोकास्तानेव तेनाव रुन्धे ॥२॥ (१)
तद्यस्यैवं विद्वान्व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति ॥३॥
येऽन्तरिक्षे पुण्या लोकास्तानेव तेनाव रुन्धे ॥४॥ (२)
तद्यस्यैवं विद्वान्व्रात्यस्तृतीयां रात्रिमतिथिर्गृहे वसति ॥५॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । एकाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥१॥

ये । पृथिव्याम् । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ २ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । द्वितीयाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥३॥

ये । अन्तरिक्षे । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ ४ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । तृतीयाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥५॥



**XV.12.9** does not know the path traversed by the elders, nor the path traversed by the enlightened ones.

**XV.12.10** He is cut off from the enlightened ones; his offering is (regarded as) not duly made.

**XV.12.11** For him, whoever performs a sacrifice without being permitted by such a knowledgeable vow-observing sage, there does not remain a secure place in this world.

### PARYĀYA - XIII

## Vrātyāḥ

**XV.13.1** So he, at whose home such a knowledgeable vow-observing sage stays for one night as a guest.

**XV.13.2** Secures thereby all the auspicious places that are on the earth.

**XV.13.3** So he, at whose home such a knowledgeable vow-observing sage stays for the second night as a guest.

**XV.13.4** Secures thereby all the auspicious places that are in the midspace.

**XV.13.5** So he, at whose home such a knowledgeable vow-observing sage stays for the third night as a guest.

ये दिवि पुण्या लोकास्तानेव तेनाव रुन्धे ॥६॥ (४)
तद्यस्यैवं विद्वान्व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति ॥७॥
ये पुण्यानां पुण्या लोकास्तानेव तेनाव रुन्धे ॥८॥ (५)
तद्यस्यैवं विद्वान्व्रात्योऽपरिमिता रात्रीरतिथिर्गृहे वसति ॥९॥
य एवापरिमिताः पुण्या लोकास्तानेव तेनाव रुन्धे ॥१०॥ (६)
अथ यस्याव्रात्यो व्रात्यब्रुवो नामबिभ्रत्यतिथिर्गृहानागच्छेत् ॥११॥
कर्षेदेनं न चैनं कर्षेत् ॥१२॥
अस्यै देवताया उदकं याचामीमां देवतां वासय इमामिमां
देवतां परि वेवेष्मीत्येनं परि वेविष्यात् ॥१३॥

ये । दिवि । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ ६ ॥
तत् । यस्य । एवम् । विद्वान् । व्रात्यः । चतुर्थीम् । रात्रिम् । अतिथिः । गृहे । वसति ॥
ये । पुण्यानाम् । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ ८ ॥
तत् । यस्य । एवम् । विद्वान् । व्रात्यः । अपरिऽमिताः । रात्रीः । अतिथिः । गृहे । वसति ॥
ये । एव । अपरिऽमिताः । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥१०॥
अथ । यस्य । अव्रात्यः । व्रात्यऽब्रुवः । नामऽबिभ्रती । अतिथिः । गृहान् । आऽगच्छेत् ॥
कर्षेत् । एनम् । न । च । एनम् । कर्षेत् ॥ १२ ॥
अस्यै । देवतायै । उदकम । याचामि । इमाम् । देवताम् । वासये । इमाम् । इमाम् ।
देवताम् । परि । वेवेष्मि । इति । एनम् । परि । वेविष्यात् ॥ १३ ॥



**XV.13.6** Secures thereby all the auspicious places that are in the sky.

**XV.13.7** So he, at whose home such a knowledgeable vow-observing sage stays for the fourth night as a guest.

**XV.13.8** Secures thereby all the places that are auspicious of the auspicious.

**XV.13.9** So he, at whose home such a knowledgeable vow-observing sage stays for indefinite nights as a guest.

**XV.13.10** Secures thereby all the indefinite auspicious places whatsoever.

**XV.13.11** Now, he, to whose homes a non-vrātya (un-vow-observing), posting himself as a Vrātya, bearing only the name (of Vrātya), comes as a guest.

**XV.13.12** Should he drag him? He may not drag him.

**XV.13.13** I call for water for this deity; I accommodate this deity; I serve food to this deity: (saying thus) let him serve food,

तस्यामेवास्य तद्देवतायां हुतं भवति य एवं वेद ॥१४॥

तस्याम् । एव । अस्य । तत् । देवतायाम् । हुतम् । भवति । यः । एवम् । वेद ॥१४॥

[ १४ ] चतुर्दशः पर्यायः

(१–२४) चतुर्विंशत्यृचस्यास्य पर्यायस्य (१) प्रथमर्चस्त्रिपदानुष्टुप्, (२, ४, ६, ८, १०, २०, २२, २४) द्वितीयाचतुर्थीषष्ठ्यष्टमीदशमीविंशीद्वाविंशीचतुर्विंशीनां द्विपदासुरी गायत्री, (३, ९) तृतीयानवम्योः पुर उष्णिक्, (५) पञ्चम्या अनुष्टुप्, (७) सप्तम्याः प्रस्तारपङ्क्तिः, (११) एकादश्याः स्वराड्गायत्री, (१२, १४, १६, १८) द्वादशीचतुर्दशीषोडश्यष्टादशीनां भुरिक्प्राजापत्यानुष्टुप्, (१३, १५) त्रयोदशीपञ्चदश्योः [(१७) सप्तदश्याश्च] आर्ची पङ्क्तिः, (१९) एकोनविंश्या भुरिङ्नागी गायत्री, (२१) एकविंश्याः प्राजापत्या त्रिष्टुप्, [(२३) त्रयोविंश्याश्च निचृदार्ची पङ्क्तिः] छन्दांसि ॥

स यत्प्राचीं दिशमनु व्यचलन्मारुतं शर्धो भूत्वानुव्यचलन्मनोऽन्नादं कृत्वा ॥१॥
मनसान्नादेनान्नमत्ति य एवं वेद ॥२॥ (१)
स यद्दक्षिणां दिशमनु व्यचलदिन्द्रो भूत्वानुव्यचलद्बलमन्नादं कृत्वा ॥३॥
बलेनान्नादेनान्नमत्ति य एवं वेद ॥४॥ (२)
स यत्प्रतीचीं दिशमनु व्यचलद्वरुणो राजा भूत्वानुव्यचलदपोऽन्नादीः कृत्वा ॥५॥
अद्भिरन्नादीभिरन्नमत्ति य एवं वेद ॥६॥ (३)

सः । यत् । प्राचीम् । दिशम् । अनु । विऽअचलत् । मारुतम् । शर्धः । भूत्वा । अनुऽव्यचलत् । मनः । अन्नऽअदम् । कृत्वा ॥ १ ॥
मनसा । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २ ॥
सः । यत् । दक्षिणाम् । दिशम् । अनु । विऽअचलत् । इन्द्रः । भूत्वा । अनुऽव्यचलत् । बलम् । अन्नऽअदम् । कृत्वा ॥ ३ ॥
बलेन । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ ४ ॥
सः । यत् । प्रतीचीम् । दिशम् । अनु । विऽअचलत् । वरुणः । राजा । भूत्वा । अनुऽव्यचलत् । अपः । अन्नऽअदीः । कृत्वा ॥ ५ ॥
अत्ऽभिः । अन्नऽअदीभिः । अन्नम् । अत्ति । यः । एवम् । वेद ॥ ६ ॥



**XV.13.14** To that very deity that becomes duly offered, whoso knows it thus.

PARYĀYA - XIV

## Vrātyāḥ

**XV.14.1** When he follows the course towards the eastern quarter, he follows it becoming the powerful cloud-bearing wind and making the mind enjoyer of food.

**XV.14.2** With the mind as enjoyer of food, he enjoys food, whoso knows it thus.

**XV.14.3** When he follows the course towards the southern quarter, he follows it becoming the rain-cloud (Indra) and making the strength enjoyer of food.

**XV.14.4** With the strength as enjoyer of food he enjoys food, whoso knows it thus.

**XV.14.5** When he follows the course to the western quarter, he follows it becoming the glittering ocean (Varuṇa) and making the waters enjoyers of food.

**XV.14.6** With waters as enjoyers of food, he enjoys food, whoso knows it thus.

स यदुदीचीं दिशमनु व्यचलत्सोमो राजा भूत्वानुव्यचलत्
सप्तर्षिभिर्हुत आहुतिमन्नादीं कृत्वा ॥७॥
आहुत्यान्नाद्यान्नमत्ति य एवं वेद ॥८॥(४)
स यद्ध्रुवां दिशमनु व्यचलद्विष्णुर्भूत्वानुव्यचलद्विराजमन्नादीं कृत्वा ॥९॥
विराजान्नाद्यान्नमत्ति य एवं वेद ॥१०॥(५)
स यत्पशूननु व्यचलद्रुद्रो भूत्वानुव्यचलदोषधीरन्नादीः कृत्वा ॥११॥
ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद ॥१२॥(६)
स यत्पितॄननु व्यचलद्यमो राजा भूत्वानुव्यचलत्स्वधाकारमन्नादं कृत्वा ॥१३॥

सः । यत् । उदीचीम् । दिशम् । अनु । विऽअचलत् । सोमः । राजा । भूत्वा । अनुऽव्यचलत् । सप्तर्षिऽभिः । हुते । आऽहुतिम् । अन्नऽअदीम् । कृत्वा ॥ ७ ॥

आऽहुत्या । अन्नऽअद्या । अन्नम् । अत्ति । यः । एवम् । वेद ॥ ८ ॥

सः । यत् । ध्रुवाम् । दिशम् । अनु । विऽअचलत् । विष्णुः । भूत्वा । अनुऽव्यचलत् । विऽराजम् । अन्नऽअदीम् । कृत्वा ॥ ९ ॥

विऽराजा । अन्नऽअद्या । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १० ॥

सः । यत् । पशून् । अनु । विऽअचलत् । रुद्रः । भूत्वा । अनुऽव्यचलत् । ओषधीः । अन्नऽअदीः । कृत्वा ॥ ११ ॥

ओषधीभिः । अन्नऽअदीभिः । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १२ ॥

सः । यत् । पितॄन् । अनु । विऽअचलत् । यमः । राजा । भूत्वा । अनुऽव्यचलत् । स्वधाऽकारम् । अन्नऽअदम् । कृत्वा ॥ १३ ॥



**XV.14.7** When he follows the course to the northern quarter, he follows it becoming the shining Soma (cure-plant) offered by the seven-seers and making the offering enjoying of food.

**XV.14.8** With the offering as enjoyer of food, he enjoys food, whoso knows it thus.

**XV.14.9** When he follows the course to the nadir quarter, he follows it becoming the sacrifice (Viṣṇu) and making Virāj (cow) enjoyer of food.

**XV.14.10** With Virāj (cow) as enjoyer of food, he enjoys food, whoso knows it thus.

**XV.14.11** When he follows the animals, he follows them becoming the vital breath (Rudra), and making the herbs enjoyers of food.

**XV.14.12** With herbs as enjoyers of food, he enjoys food, whose knows it thus.

**XV.14.13** When he follows the elders, he follows them becoming the Controller Lord (Yama) and making the utterance of svadhā enjoyer of food.

स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद ॥१४॥ (७)
स यन्मनुष्याँ३ ननु व्यचलदग्निर्भूत्वानुव्यचलत्स्वाहाकारमन्नादं कृत्वा ॥१५॥
स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद ॥१६॥ (८)
स यदूर्ध्वां दिशमनु व्यचलद्बृहस्पतिर्भूत्वानुव्यचलद्वषट्कारमन्नादं कृत्वा ॥१७॥
वषट्कारेणान्नादेनान्नमत्ति य एवं वेद ॥१८॥ (९)
स यद्देवाननु व्यचलदीशानो भूत्वानुव्यचलन्मन्युमन्नादं कृत्वा ॥१९॥
मन्युनान्नादेनान्नमत्ति य एवं वेद ॥२०॥ (१०)

स्वधाऽकारेण । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १४ ॥

सः । यत् । मनुष्यान् । अनु । विऽअचलत् । अग्निः । भूत्वा । अनुऽव्यचलत् । स्वाहाऽकारम् । अन्नऽअदम् । कृत्वा ॥ १५ ॥

स्वाहाऽकारेण । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १६ ॥

सः । यत् । ऊर्ध्वाम् । दिशम् । अनु । विऽअचलत् । बृहस्पतिः । भूत्वा । अनुऽव्य- चलत् । वषट्ऽकारम् । अन्नऽअदम् । कृत्वा ॥ १७ ॥

वषट्ऽकारेण । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १८ ॥

सः । यत् । देवान् । अनु । विऽअचलत् । ईशानः । भूत्वा । अनुऽव्यचलत् । मन्युम् । अन्नऽअदम् । कृत्वा ॥ १९ ॥

मन्युना । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २० ॥



**XV.14.14** With the utterance of svadhā as enjoyer of food, he enjoyes food, whoso knows it thus.

**XV.14.15** When he follows men, he follows them becoming the adorable leader and making the utterance of svāhā enjoyer of food.

**XV.14.16** With the utterance of svāhā as enjoyer of food, he enjoys food, whoso knows it thus.

**XV.14.17** When he follows the course to the zenith quarter, he follows it becoming the Lord of knowledge and making the utterance of Vaṣaṭ enjoyer of food.

**XV.14.18** With the utterance of Vaṣaṭ as enjoyer of food, he enjoys food, whoso knows it thus.

**XV.14.19** When he follows the enlightened ones, he follows them becoming the master (Īśāna) and making the fervour enjoyer of food.

**XV.14.20** With the fervour as enjoyer of food, he enjoyes food, whoso know it thus.

स यत्प्रजा अनु व्यचलत्प्रजापतिर्भूत्वानुव्य॒चलत्प्राणमन्नादं कृत्वा ॥२१॥
प्राणेनान्नादेनान्नमत्ति य एवं वेद ॥२२॥ (११)
स यत्सर्वानन्तर्देशाननु व्यचलत्परमेष्ठी भूत्वानुव्य॒चलद्ब्रह्मान्नादं कृत्वा ॥२३॥
ब्रह्मणान्नादेनान्नमत्ति य एवं वेद ॥२४॥ (१२)

सः । यत् । प्रऽजाः । अनु । विऽअचलत् । प्रजाऽपतिः । भूत्वा । अनुऽव्य॒चलत् । प्राणम् । अन्नऽअदम् । कृत्वा ॥ २१ ॥

प्राणेन । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २२ ॥

सः । यत् । सर्वान् । अन्तःऽदेशान् । अनु । विऽअचलत् । परमेऽस्थी । भूत्वा । अनुऽव्य॒चलत् । ब्रह्म । अन्नऽअदम् । कृत्वा ॥ २३ ॥

ब्रह्मणा । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २४ ॥

[ १५ ] पञ्चदशः पर्यायः

(१–९) नवर्चस्यास्य पर्यायस्य (१) प्रथमर्चः (तृतीयादिषु 'तस्य व्रात्यस्य' इत्यस्य च) दैवी पङ्क्तिः, (२) द्वितीयाया आसुरी बृहती, (३) तृतीयायाः प्राजापत्यानुष्टुप्, (४, ७, ८) चतुर्थीसप्तम्यष्टमीनां भुरिक्प्राजापत्यानुष्टुप्, (५–६) पञ्चमीषष्ठयोर्द्विपदा साम्नी बृहती, (९) नवम्याश्च विराड्गायत्री छन्दांसि ॥

तस्य व्रात्यस्य ॥१॥
सप्त प्राणाः सप्तापानाः सप्त व्यानाः ॥२॥
तस्य व्रात्यस्य । योऽस्य प्रथमः प्राण ऊर्ध्वो नामायं सो अग्निः ॥३॥

तस्य । व्रात्यस्य ॥ १ ॥

सप्त । प्राणाः । सप्त । अपानाः । सप्त । विऽआनाः ॥ २ ॥

तस्य । व्रात्यस्य । यः । अस्य । प्रथमः । प्राणः । ऊर्ध्वः । नाम । अयम् । सः । अग्निः ॥ ३ ॥



XV.14.21 When he follows the creatures, he follows them becoming the Lord of the creatures and the vital breath enjoyer of food.

XV.14.22 With vital breath as enjoyer of food, he enjoyes food, who knows it thus

XV.14.23 When he follows the course of all the intermediate quarters, he follows it becoming the Lord dwelling in the highest abode and making the knowledge enjoyer of food.

XV.14.24 With the knowledge as enjoyer of food, he enjoys food, whoso knows it thus.

PARYĀYA - XV

## Vrātyāḥ

XV.15.1 Of that Vrātya (the supreme being) -

XV.15.2 seven are in-breaths, seven out-breaths, (and) seven diffused breaths.

XV.15.3 Of that Vrātya; what is his first in-breath, called ūrdhva (upward), that is this fire.

तस्य व्रात्यस्य । योऽस्य द्वितीयः प्राणः प्रौढो नामासौ स आदित्यः ॥४॥
तस्य व्रात्यस्य । योऽस्य तृतीयः प्राणोऽभ्यूढो नामासौ स चन्द्रमाः ॥५॥
तस्य व्रात्यस्य । योऽस्य चतुर्थः प्राणो विभूर्नामायं स पवमानः ॥६॥
तस्य व्रात्यस्य । योऽस्य पञ्चमः प्राणो योनिर्नाम ता इमा आपः ॥७॥
तस्य व्रात्यस्य । योऽस्य षष्ठः प्राणः प्रियो नाम त इमे पशवः ॥८॥
तस्य व्रात्यस्य । योऽस्य सप्तमः प्राणोऽपरिमितो नाम ता इमाः प्रजाः ॥९॥

तस्य । व्रात्यस्य । यः । अस्य । द्वितीयः । प्राणः । प्रऽऊढः । नाम । असौ । सः । आदित्यः ॥४॥
तस्य । व्रात्यस्य । यः । अस्य । तृतीयः । प्राणः । अभिऽऊढः । नाम । असौ । सः । चन्द्रमाः ॥
तस्य । व्रात्यस्य । यः । अस्य । चतुर्थः । प्राणः । विऽभूः । नाम । अयम् । सः । पवमानः ॥६॥
तस्य । व्रात्यस्य । यः । अस्य । पञ्चमः । प्राणः । योनिः । नाम । ताः । इमाः । आपः ॥ ७ ॥
तस्य । व्रात्यस्य । यः । अस्य । षष्ठः । प्राणः । प्रियः । नाम । ते । इमे । पशवः ॥८॥
तस्य । व्रात्यस्य । यः । अस्य । सप्तमः । प्राणः । अपरिऽमितः । नाम । ताः । इमाः । प्रऽजाः ॥९॥

[ १६ ] षोडशः पर्यायः

(१-७) सप्तर्चस्यास्य पर्यायस्य (१, ३) प्रथमातृतीययोर्ऋचोः साम्न्युष्णिक् (सर्वासु 'तस्य व्रात्यस्य' इत्यस्य दैवी पङ्क्तिः), (२, ४-५) द्वितीयाचतुर्थीपञ्चमीनां प्राजापत्योष्णिक्, (६) षष्ठ्या याजुषी त्रिष्टुप्, (७) सप्तम्याश्चासुरी गायत्री छन्दांसि ॥

तस्य व्रात्यस्य । योऽस्य प्रथमोऽपानः सा पौर्णमासी ॥१॥

तस्य । व्रात्यस्य । यः । अस्य । प्रथमः । अपानः । सा । पौर्णऽमासी ॥ १ ॥



**XV.15.4** Of that Vrātya; what is his second in-breath, called prauḍha (nature), that is sun yonder.

**XV.15.5.** Of that Vrātya; what is his third in-breath, called Abhuḍha (concluded), that is the moon yonder.

**XV.15.6** Of that Vrātya; what is his fourth in-breath, called Vibhūḥ (pervading), that is the purifying wind (or Soma)

**XV.15.7** Of that Vrātya; what is his fifth in-breath, called Yoni (the womb), that are these waters.

**XV.15.8** Of that Vrātya; what is his sixth in-breath, called priya (beloved), that are these animals.

**XV.15.9** Of that Vrātya; what is his seventh in-breath. called Aparimita (limitless), that are these creatures.

PARYĀYA - XVI

## Vrātyāḥ

**XV.16.1** Of that Vrātya; what is his first out-breath, that is the night of full moon.

तस्य व्रात्यस्य । योऽस्य द्वितीयोऽपानः साष्टका ॥२॥
तस्य व्रात्यस्य । योऽस्य तृतीयोऽपानः सामावास्या ॥३॥
तस्य व्रात्यस्य । योऽस्य चतुर्थोऽपानः सा श्रद्धा ॥४॥
तस्य व्रात्यस्य । योऽस्य पञ्चमोऽपानः सा दीक्षा ॥५॥
तस्य व्रात्यस्य । योऽस्य षष्ठोऽपानः स यज्ञः ॥६॥
तस्य व्रात्यस्य । योऽस्य सप्तमोऽपानस्ता इमा दक्षिणाः ॥७॥

तस्यं । व्रात्यस्य । यः । अस्य । द्वितीयः । अपानः । सा । अष्टका ॥ २ ॥

तस्यं । व्रात्यस्य । यः । अस्य । तृतीयः । अपानः । सा । अमाऽवास्या ॥ ३ ॥

तस्यं । व्रात्यस्य । यः । अस्य । चतुर्थः । अपानः । सा । श्रद्धा ॥ ४ ॥

तस्यं । व्रात्यस्य । यः । अस्य । पञ्चमः । अपानः । सा । दीक्षा ॥ ५ ॥

तस्यं । व्रात्यस्य । यः । अस्य । षष्ठः । अपानः । सः । यज्ञः ॥ ६ ॥

तस्यं । व्रात्यस्य । यः । अस्य । सप्तमः । अपानः । ताः । इमाः । दक्षिणाः ॥ ७ ॥

[ १७ ] सप्तदशः पर्यायः

(१–१०) दशर्चस्यास्य पर्यायस्य (१, ५) प्रथमापञ्चम्योः प्राजापत्योष्णिक् (सर्वासु 'तस्य व्रात्यस्य' इत्यस्य दैवी पङ्क्तिः), (२, ७) द्वितीयासप्तम्योरासुर्यनुष्टुप्, (३) तृतीयाया याजुषी पङ्क्तिः, (४) चतुर्थ्याः साम्न्युष्णिक्, (६) षष्ठ्या याजुषी त्रिष्टुप्, (८) अष्टम्यास्त्रिपदा प्रतिष्ठार्ची पङ्क्तिः, (९) नवम्या द्विपदा साम्नी त्रिष्टुप्, (१०) दशम्याश्च साम्न्यनुष्टुप् छन्दांसि ॥

तस्य व्रात्यस्य । योऽस्य प्रथमो व्यानः सेयं भूमिः ॥१॥
तस्य व्रात्यस्य । योऽस्य द्वितीयो व्यानस्तदन्तरिक्षम् ॥२॥

तस्यं । व्रात्यस्य । यः । अस्य । प्रथमः । विऽआनः । सा । इयम् । भूमिः ॥ १ ॥

तस्यं । व्रात्यस्य । यः । अस्य । द्वितीयः । विऽआनः । तत् । अन्तरिक्षम् ॥ २ ॥



**XV.16.2** Of that Vrātya; what is his second out-breath, that is the eighth-night of the moon's quarter (āṣṭaka).

**XV.16.3** Of that Vrātya; what is his third out-breath, that is the night of new-moon.

**XV.16.4** Of that Vrātya; what is his fourth out-breath, that is faith.

**XV.16.5** Of that Vrātya; what is his fifth out-breath, that is Consecration.

**XV.16.6** Of that Vrātya; what is his sixth out-breath, that is sacrifice.

**XV.16.7** Of that Vrātya; what is his seventh out-breath, that are these sacrificial gifts.

## PARYĀYA - XVII

### Vrātyaḥ

**XV.17.1** Of the Vrātya; what is his first diffused breath (Vyāna), that is this earth.

**XV.17.2** Of that Vrātya; what is his second diffused breath, that is the midspace.

तस्य व्रात्यस्य । योऽस्य तृतीयो व्यानः सा द्यौः ॥३॥
तस्य व्रात्यस्य । योऽस्य चतुर्थो व्यानस्तानि नक्षत्राणि ॥४॥
तस्य व्रात्यस्य । योऽस्य पञ्चमो व्यानस्त ऋतवः ॥५॥
तस्य व्रात्यस्य । योऽस्य षष्ठो व्यानस्त आर्तवाः ॥६॥
तस्य व्रात्यस्य । योऽस्य सप्तमो व्यानः स संवत्सरः ॥७॥
तस्य व्रात्यस्य । समानमर्थं परि यन्ति देवाः संवत्सरं वा एतदृतवोऽनुपरियन्ति व्रात्यं च ॥८॥
तस्य व्रात्यस्य । यदादित्यमभिसंविशन्त्यमावास्यां चैव तत्पौर्णमासीं च ॥९॥

तस्य । व्रात्यस्य । यः । अस्य । तृतीयः । विऽआनः । सा । द्यौः ॥ ३ ॥
तस्य । व्रात्यस्य । यः । अस्य । चतुर्थः । विऽआनः । तानि । नक्षत्राणि ॥ ४ ॥
तस्य । व्रात्यस्य । यः । अस्य । पञ्चमः । विऽआनः । ते । ऋतवः ॥ ५ ॥
तस्य । व्रात्यस्य । यः । अस्य । षष्ठः । विऽआनः । ते । आर्तवाः ॥ ६ ॥
तस्य । व्रात्यस्य । यः । अस्य । सप्तमः । विऽआनः । सः । सम्ऽवत्सरः ॥ ७ ॥
तस्य । व्रात्यस्य । समानम् । अर्थम् । परि । यन्ति । देवाः । सम्ऽवत्सरम् । वै । एतत् । ऋतवः । अनुऽपरियन्ति । व्रात्यम् । च ॥ ८ ॥
तस्य । व्रात्यस्य । यत् । आदित्यम् । अभिऽसंविशन्ति । अमाऽवास्याम् । च । एव । तत् । पौर्णऽमासीम् । च ॥ ९ ॥



**XV.17.3** Of that Vrātya; what is his third diffused breath, that is the sky yonder.

**XV.17.4** Of that Vrātya; what is his fourth diffused breath, that are those constellations.

**XV.17.5** Of that Vrātya; what is his fifth diffused breath, that are those seasons.

**XV.17.6** Of that Vrātya; what is his sixth diffused breath, that are those groups of seasons.

**XV.17.7** Of that Vrātya; what is his seventh diffused breath, that is the year.

**XV.17.8** Of that Vrātya; the enlightened ones go around him with one and the same purpose, just as the seasons go around following the year as well as the Vrātya.

**XV.17.9** Of that Vrātya; as they enter into the sun on the new-moon's night, so that do on the full moon's night as well.

तस्य व्रात्यस्य। एकं तदेषाममृतत्वमित्याहुतिरेव ॥१०॥

तस्य । व्रात्यस्य । एकम् । तत् । एषाम् । अमृतऽत्वम् । इति । आऽहुतिः । एव ॥ १० ॥

[ १८ ] अष्टादशः पर्यायः

(१–५) पञ्चर्चस्यास्य पर्यायस्य (१) प्रथमर्चो दैवी पङ्क्तिः, (२–३) द्वितीयातृतीययोरार्ची बृहती, (४) चतुर्थ्या आर्ष्यनुष्टुप्, (५) पञ्चम्याश्च साम्न्युष्णिक् छन्दांसि ॥

तस्य व्रात्यस्य ॥१॥
यदस्य दक्षिणमक्ष्यसौ स आदित्यो यदस्य सव्यमक्ष्यसौ स चन्द्रमाः ॥२॥
योऽस्य दक्षिणः कर्णोऽयं सो अग्निर्योऽस्य सव्यः कर्णोऽयं स पवमानः ॥३॥
अहोरात्रे नासिके दितिश्चादितिश्च शीर्षकपाले संवत्सरः शिरः ॥४॥
अह्ना प्रत्यङ्व्रात्यो रात्र्या प्राङ्नमो व्रात्याय ॥५॥

तस्य । व्रात्यस्य ॥ १ ॥

यत् । अस्य । दक्षिणम् । अक्षि । असौ । सः । आदित्यः । यत् । अस्य । सव्यम् । अक्षि । असौ । सः । चन्द्रमाः ॥ २ ॥

यः । अस्य । दक्षिणः । कर्णः । अयम् । सः । अग्निः । यः । अस्य । सव्यः । कर्णः । अयम् । सः । पवमानः ॥ ३ ॥

अहोरात्रे इति । नासिके इति । दितिः । च । अदितिः । च । शीर्षकपाले इति शीर्षऽकपाले । सम्ऽवत्सरः । शिरः ॥ ४ ॥

अह्ना । प्रत्यङ् । व्रात्यः । रात्र्या । प्राङ् । नमः । व्रात्याय ॥ ५ ॥

॥ इति पञ्चदशं काण्डम् ॥

[ पञ्चदशकाण्डे पर्यायाः १८, मन्त्राः २२० ]



**XV.17.10** Of that Vrātya; that immortality of theirs is one; therefore is the offering.

**PARYĀYA - XVIII**

## Vrātyaḥ

**XV.18.1** Of that Vrātya (the wandering saint);

**XV.18.2** What is his right eye, that is the sun; what is his left eye, that is the moon.

**XV.18.3** What is his right ear, that is this fire; what is his left ear, that is this purifying wind (or the Soma).

**XV.18.4** Day and night are his two nostrils; the finitude (diti) and infinity (aditi) are his two halves of his skull; the year is his head.

**XV.18.5** During the day the Vrātya forces the west, during night, the east. Homage be to the Vrātya.

---

**Here ends Kāṇḍa XV**

**Hymns 18, Verses 220**

---

# THE FOUR VEDAS

**COMPLETE TRANSLATION IN ENGLISH**
**(A SET OF 22 VOLUMES)**

*Translated by*
***Swami Satya Prakash Saraswati &***
***Satyakam Vidyalankar***

***Ved Mantras in Sanskrit with***
***transliteration followed by translation***
***in easily understandable modern English***
***Printed by offset with beautiful binding***
***More than 10,000 pages***
***Being offered at cost price***

**Published by**
**D.A.V. Publication Division**
**(VED PRATISHTHAN वेद प्रतिष्ठान)**
Arya Samaj Building, UP Block
Pitampura, Delhi - 110034

